र्माणोनरकपालास्तंबालं मूर्वं अभितापयंति जटित्रवत् पचति तेनारकास्तत्राभितप्य माना कदर्थ्यमानास्तिष्ठति । यथा मत्स्याजीवतोज्योति प्राप्ता अग्निगता पीड्यंते तथा पीड्यमाना ॥ १३ ॥ ( संतछणमिति ) नामेति संभावनाया । सतक्षण छेदन महाभि तापं महाडुखोत्पादकं । ततस्ते यत्र नरकावासे असाधुकर्माण क्रूरकर्माणोनरकपाला कुठारहस्तान् हस्तैः पादैश्च बध्वा फलकमिव काष्ठखंममिव तक्ष्णुवति छिंदति ॥ १४ ॥

॥ टीका–अपिच । ( चत्तारित्यादि ) चतसृष्वपि दिक्षु चतुरोग्नीन् समारभ्य प्रज्वा ल्य यस्मिन्नरकावासे क्रूरकर्माणोनरकपालाअभिमुख्येनात्यर्थं तापयंति जटित्रवत्प चति बालमङ्क नारकपूर्वकृतडुश्चरित । तेतु नारकजीवाएवमभितप्यमाना कदर्थ्यमानाः स्वकर्मनिगडितास्तत्रैव प्रभूत काल महाडुखाकुले नरके तिष्ठंति । दृष्टांतमाह । यथाजी वतोमत्स्यामीनाउपज्योतिरग्ने समीपे प्राप्ता परवशत्वादन्यत्र गंतुमसमर्थास्तत्रैव तिष्ठत्येव नारकाअपि । मत्स्याना तापासहिष्णुत्वादग्नावत्यंत डुखमुत्पद्यतइत्यतस्तद्ग्रह णमिति ॥ १३ ॥ किंचान्यत् ( संतछमित्यादि) समेकीभावेन तक्षण सतक्षण । नामश ब्द संभावनाया । यदेतत्संतक्षण तत्सर्वेषा प्राणिना महाभितापं महाडुखोत्पादकमित्ये व संभाव्यते । यदेव तत किंचित्याह । ते नारकानरकपालायत्र नरकावासे स्वभवनादा गताअसाधुकर्माण क्रूरकर्माणोनिरनुकंपा कुठारहस्ता परशुपाणयस्तान्नारकानत्राणान् हस्तैःपादैश्च बध्वासयम्य फलकमिव काष्ठशकलमिव तक्ष्णुवति तनूकुर्वति छिदंतीत्यर्थ १४

पुणो वच्च समुस्सिअंगे, भिन्नुत्तमंगे परिवत्तयंता॥ पयंति
इए फुरते, सजीवमच्छेव अयोकवल्ले ॥ १५॥ नोचेव ते तछ
वंति, णमिज्जती तिव्वभिवेयणाए ॥ तमाणुभाग अणुवेदयं
कति डुक्खी इह डुक्कडेण ॥ १६ ॥

नरकोवह
मिवभूत महा

के० ) ते परमाधार्मिको ते नारकीजीवोनुज रक्त, काढीने कडाहमां फरी तेज लोहीमां ते नारकीउने पचावे ते नारकीउ केवाछे तोके (व सु तेणेकरी ( समुस्सिके० ) खरडयाछे (अंगेके) अग जेमना एवा ते नारकीने केवीरीते पचावे तोके (भिन्नुत्तमगेके०) प्रथम तेमनुं उत्तमांग भेदीने पछी (प रिवत्तयता के० ) परिवर्त्तयता एटले सम्रु होय तेने उपराठु होयकरे अने उपराठुं तेने सम्रुकरे अर्थात् उलटावी पलटावीने पचावे ( पयतिणंणेरइएफुरते के० ) त्यां पचता थका ते नारकी तापे करी विव्हल थता आघा पाछा उछलता हालता थका धूजे, ट लवले, कोनीपेरे तोके ( सजीवमछेवअयोकवल्ले के० ) जेम जीवता मत्स्य तप्त लोखं

( कटइल के० ) कांटावाली एवी ( महंतं के० ) महोटी ( नूमि के० ) नूमिकानी वे लुने विषे ( अणुक्कमता के० ) अतिक्रमावे ते जेम जेम आकरा चलावे तेम तेम ङु ख पामे तथा ( विवसुचित्ते के० ) मूर्छित एवा नारकीतने ( विव ग्गतपेहिके० ) अने क नरकपालो त्रापें करी बाधीने (समीरियाके०) तेना पूर्वकृत पापकर्म प्रकाशीने ( कोट्ट बलिकरंति के० ) कोट एटले नगरनी बलिवाकुल जेम दशोदिशे संकडाखंम थइ वि खरी जाय तेम परधार्मिको ते नारकीना खंमो खम करी विखेरी नाखे ॥ १६ ॥

॥ दीपिका–( अनिजुजिआइति ) रौद्रकर्मणि अपरान्नारकान् हननव्यापारेऽनियुज्य व्यापार्य असाधुकर्मणइपुचोदितान् शरानिघातप्रेरितान् हस्तिवद् वाहयति नरकपाला । यथा हस्ती वाह्यते समारुह्य एव तान् वाहयति । तस्य नारकस्योपर्येकं द्वौ त्रीन् वा स मारोप्य ततस्त वाहयति । अतिनारारोपणेनावहतमारुष्य रोषकृत्वा प्रतोदादिना विध्य ति । सेतस्य नारकस्य (ककाणउत्ति) मर्मणि विध्यति छिंदति ॥ १५ ॥ (बालाइति) बाला॰ प रवशामहतीं रुधिरादिप्रपिछिला कटकाकुला नूमिमनुक्रामतोमदगतयोबलात्प्रेर्यते । तथा न्यान् तर्षकाकारान् विषसुचित्तान् मूर्छितान् विविधमनेकधाबद्धानरकपाला पापेन समी रिता प्रेरितास्तान् कुट्टयित्वा बलिं कुर्वंति खडश छित्वा इतश्चेतश्चक्षिपति ॥ १६ ॥

॥ टीका–(अनिजुजियाइत्यादि) रौद्रकर्मण्यपरनारकहननादिकेऽनियुज्य व्यापार्य यदि वा जन्मांतरकृत रौद्र सत्त्वोपघातकार्यमनियुज्य स्मारयित्वा असाधून्यशोननानि जन्मांतर कृतानि कर्माण्यनुष्ठानानि येषाते तथा तानिपुचोदितान् शरानिघातप्रेरितान् हस्तिव द् वाहयति नरकपाला । यथा हस्ती वाह्यते समारुह्येव तमपि वाहयति । यदिवा हस्ती महातं नार वहत्येवतमपि नारकं वाहयत्युपलक्षणार्थत्वादस्योष्ट्रवद् वाहयतीत्याद्यप्यायो ज्य कथ। वाहयतीति दर्शयति । तस्य नारकस्योपर्येकं द्वौ त्रीन् वा समारुह्य समारोप्य ततस्त वाहयति । अतिनारारोपणेनावहतमारुष्य क्रोध कृत्वा प्रतोदादिना विध्यति तुदं ति । सेतस्य नारकस्य ( काकणउत्ति ) मर्माणि विध्यतीत्यर्थ ॥ १५ ॥ अपिच ( बाला बलाइत्यादि ) बालाइव बाला परतंत्रा पिछिला रुधिरादिना तथा कटकाकुला नूमिम नुक्रामतोमदगतयोबलात्प्रेर्यते । तथान्यान् विषसुचित्तान् मूर्छितास्तर्षकाकारान्वि विधमनेकश बद्धानरकपाला समीरिता पापेन कर्मणा चोदितास्तान्नारकान् कुट्ट यित्वा खमश कृत्वा ( बलिंकरिंति ) नगरबलिवदितश्चेतश्च क्षिपतीत्यर्थ । यदिवा को एवलि कुर्वंतीति ॥ १६ ॥

वेतालिए नाम महान्निताह्ने, ( ) पवयमतलिरके ॥ हम्मति
तत्ता बहुकूर पर ॥ ॥१७॥ सवाहिया

त्यांते नारकी अशुची वस्तुना आहारी थता घणोकाल सुधी रहे ( तुट्टंति कम्मोवगया किमीहि के० ) कर्मने वश पड्या एवा नारकीने परमाधार्मिक विकुर्विने पीडे ॥ २० ॥

॥दीपिका-(पाणेहिणमिति) ण वाक्यालंकारे।ते पापानरकपाला प्राणै शरीरेंद्रियादि निर्वियोजयति येनैव दुःखं ते लभंते तद्दुःखकारणं चे भवता याथातथ्येन सत्यतया प्रव क्ष्यामि तेषा दंडैर्नरकविशेषैस्तत्र बालानरकपाला पूर्वकृत स्मारयति । पूर्वभवे त्वं मांसानि खादसि पिबसिमद्य गच्छसि परदारान् । साप्रत विपाकप्राप्तेन कर्मणा किमेवमाक्रंदसीत्येवं पुराकृतं सर्वैर्दंडैः दुःखविशेषैस्तादृशमेव दुःखमुत्पादयति ॥ १९ ॥ ( तेइति ) ते नारका हन्यमानानष्टा सतोऽन्यस्मिन् घोरतरे नरके पतति। किंभूते पूर्णे भृते।दुरूपं विष्टासृङ्मासादिमल तस्यभृते महाभितापेऽतिसतापोपेते तत्र नरके दुरूपस्याशुच्यादेर्भक्षिणस्तिष्ठंति।तथा कृमिभिर्नरकपालकृतै परस्परकृतैश्च तुद्यंते व्यथ्यंते । तथा चागम । छट्ठीसत्तमासुण पुढवीसुनेरइया पहूमहंताइ लोहिअकुंथुरूवाइं विउव्विता अन्नमन्नस्स काय समचउरगेमाणा २ अणुखायमाणा २ चिट्ठंति॥२०॥

॥ टीका-तथा ( पाणेहिणमित्यादि ) णमिति वाक्यालकारे । प्राणैः शरीरेंद्रियादिभिस्ते पापा पापकर्मणोनरकपालावियोजयति शरीरावयवाना पाटनादिभि प्रकारैर्विकर्तनादवयवान् विश्लेषयंति। किमर्थमेव कुर्वंतीत्याह । तद्दुःखकारणं भेयुष्माकं प्रवक्ष्यामि याथातथ्येनावितथं प्रतिपादयामीति । दंडयति पीडामुत्पादयंतीति दंडाःदुःखविशेषास्तैर्नारकाणामापादितैर्बालानिर्विवेकानरकपाला पूर्वकृत स्मारयति । तद्यथा । तदा हृष्टस्त्वं खादसि समुत्कृत्य प्राणिना मांस तथा पिबसि त तद्रस मद्य च गच्छसि परदारान् सांप्रत तद्विपाकापादितेन कर्मणाऽभितप्यमान किमेव रारटीषीत्येव सर्वं पुराकृतैर्दंडैर्दुःखविशेषै स्मरयंतस्तादृक् भूतमेव दुःखविशेषमुत्पादयंतोनरकपाला पीडयंतीति ॥ १९ ॥ किंच ( तेहम्ममाणाइत्यादि ) ते वराकानारकाहन्यमानास्तोद्यमानानरकपालेभ्योनष्टेऽन्यस्मिन् घोरतरे नरकैकदेशे पतति गच्छति । किंभूते नरके पूर्णे भृते ।दुष्ट रूप यस्य तद्दुरूप विष्टासृग्मांसादिकं मलं तस्य भृते तथा महाभितापिते सतापोपेते ते नारका स्वकर्मावबद्धास्तत्रैवभूते नरके दुरूपभक्षिणोऽशुच्यादिभक्षकाः प्रभूतं कालं यावत्तिष्ठंति । तथा कृमिभिर्नरकपालापादितै परस्परकृतैश्च स्वकर्मोपगता स्वकर्मढौकितास्तुद्यंते व्यथ्यंते इति । तथाचागम । छट्ठीसत्तमासुणं पुढवीसु नेरइयाहूपमहंताइ लोहिकुंथुरूवाइ विउव्वित्तअन्नमन्नस्सकायंसमचउरगे माणामाणा अणुखायमाण अणुखायमाणा चिट्ठंति ॥ २० ॥

पीमितादुष्कृतं पाप विद्यते येषाते दुष्कृतिनोमहापापा । अहोअहनि तथा रात्रौ च परितप्यमानाअतिदुःखेन पीड्यमाना सत करुण दीन स्तनत्याक्रंदति । तथैकांतेन कूटानि दुःखोत्पत्तिस्थानानि यस्मिन् तथा तस्मिन्नेव नूते नरके महति विस्तीर्णे पतिता प्राणिनस्तेनच कूटेन गलयंत्रपाशादिना पाषाणसमूहलक्षणेन वा तत्र तस्मिन्विषमे हता । तुशब्दस्यावधारणार्थत्वात् स्तनत्येव केवलमिति ॥ १८ ॥

नजंति णं पुव्वमरीसरोसं, समुग्गरे ते मुसले गहेतु ॥ ते भिन्नदेहा रुहिरं वमता, उमुद्धगा धरणितले पडति ॥ १९ ॥ अणासिया नाम महासियाला, पागप्निणो तत्र सया सकोवा ॥ खज्जंति तत्रा वढुकूरकम्मा, अदूरए संकलियाहि बद्धा॥ २० ॥

अर्थ-(पुव्वमरीसरोसतेके०) पूर्व जन्मना वैरी, सरखा तेपरमाधार्मिक रोस सहित कोपायमान थका (समुग्गरेमुगलेगहेतु के०) मुद्गर सहित मुसल ग्रहण करीने ते नारकीना मस्तकादिकने (नजतिण के०) नांगी नाखे तेवारे (तेनिन्नदेहारुहिरवमता के०) तेनारकी बापडा निन्नदेही थका लोहिवमता बता प्राबल्ये करी (उमुद्धगा के०) अधो मुख करी (धरणितलेपडति) धरणीतलने विषे पडे ॥१९॥ त्या (अणासियाके०)जुख्या अहीं नाम शब्द सनावनायेछे (महाके०) अने महोटा शरीरना प्रमाण वाला (पागप्निणो के०) प्रगल्जित एटले दुष्ट (सयासकोवाके०) सदाकाल क्रोध सहित एवा (सियाला के०) सीयालिया जीवने (तत्रके०) ते नरकने विषे परमाधार्मिको विकूर्वे ते (तत्राके०) त्यां नारकीमा (अदूरएसकलियाहिबद्धा के०) ढुकडा शांकले करी बांध्या थका एवाजे (वढुकूरकम्मा के०) माहा पापी अत्यंत क्रूर कर्मना करनार नारकीउ तेने (खज्जति के०) खम खम करी नक्षण करे ॥ २० ॥

---

॥ दीपिका-(नजतीति) ण वाक्यालंकारे । पूर्वमरयोजन्मातरवैरिणइव परमाधार्मिकानारकावा अन्येषामगानि सरोष समुद्गराणि मुसलानि गृहीत्वा नजति ते नारकाभिन्नदेहारुधिर वमतोऽधोमुखाधरणितले पतंति ॥ १९ ॥ महात शृगालानरकपालविकुर्विताअनाशिनोबुभुक्षिता । नामेति सनावने । सनाव्यते एतत्तत्र । प्रगल्भिताधृष्टारौद्ररूपायत्र सदा सकोपा सनवति । तत्र तै सृगालादिनिर्बहुक्रूरकर्माण शृखलादिनिर्लोहनिगडैर्बद्धाअदूरगा परस्परसमीपएव वर्तिन खाद्यते नक्ष्यते ॥ २० ॥

---

॥ टीका-अपिच (नजतिणमित्यादि) णमिति वाक्यालंकारे । पूर्वमरयइवारयोज

मुद्धातोपगतस्य क्षुरप्रेण नासिकां छिंदंति तथौष्ठावपि द्वावपि कर्णौ छिदंति तथा मद्य मांसरसाऽभिलिप्सोर्मृषाभाषिणोजिव्हा वितस्तिमात्रामाक्षिप्य तीक्ष्णाभिः शूलाभिरभि तापयंत्यपनयति ॥ २२ ॥

ते तिप्पमाणा तलसंपुडंव, राइंदियं तत्र थणंति बाला॥ गलंति ते सोणिअपूयमंस, पज्जोइया खारपइद्धियंगा ॥२३॥ जइ ते सुता लो हितपूअपाई, बालागणी तेअगुणा परेण॥ कुम्भी महंताहियपोर सीया, समूसिता लोहियपूयपुण्णा ॥ २४ ॥

अर्थ-( ते के० ) तेनारकी कान होठ प्रमुख अंगोपांगना छेदन थकी (तिप्पमाणा के० ) लोहिजरता थका ( तलसंपुडंव के० ) सुका ताडवृक्षना पान जेम पवने उडता शब्द करे, तेनीपेरे ( राइंदियतत्थणंतिबालाके०) ते बाल अज्ञानी निरविवेकी एवा नारकी बापडा रात्र दिवश त्यां आक्रंद शब्द करे ( गलंतितेसोणियपूयमसं के० ) त्यांते नारकीना अंगोपांग छेद्या पछी तेना शरीरमांथी लोही परु तथा मांसादिक जरे ( पज्जोइया के० ) तेवारे तेने शेककरी अग्नीये प्रज्वालीने ( खारपइद्धियंगा के० ) लवणादिक खारे अंगोपांग खरड्या छता रुधिर परु अने मांस एटलावाना रात्र दिवस तेमना शरीरमांथी गलता थका रहेछे॥२३॥वली श्रीसुधर्मस्वामी श्रीजंबूस्वामी प्रत्ये कहेछे के, ( जइते के० ( यदि तें श्रीमहावीर भाषित (लोहितपूअपाई के०) रुधिर अने परुनी पात्री एटले रुधिर अने पाकीरुधिर ते परु ए बने ज्यां पचेछे एवो स्थानक कुंभी भाजन विशेष ते ( सुता के० ) ते सांभलीछे ते केवीछे तोके ( बालागणीके०) नवी अग्नीना ( तेअ के० ) तेज करता पण (गुणापरेण के०) गुणे करी अधिकछे एटले अत्यंत बलतीछे ( कुम्भीमहंताहियपोरसीया के० ) एवी पुरुष प्रमाण थकी अधिक मोटी कुम्भी भाजन विशेष ते केवीछे तोके ( समूसिता के० ) उंटने आकारे उचीछे अने (लोहियपूयपुण्णा के० ) रुधिर अने परु एणे करी परिपूर्ण भरेलीछे. ॥ २४ ॥

---

॥ दीपिका-( तेऽति ) ते नारका शोणितं तिप्यमाना स्रवतोयत्र रात्रिदिनं गमयंति तत्र प्रदेशे तालसंपुटाइव पवनप्रेरितशुष्कपत्रसचयाइव सदा विस्वरं स्तनंति क्रदति । वन्हिना प्रद्योतिताज्वालिता क्षारेणप्रदिग्धांगा शोणितं पूयं मांसं वाऽहर्निशं गलंति ॥ २३ ॥ ( जईति ) सुधर्मस्वामी जंबूस्वामिनं वक्ति ।यदि ते त्वया श्रुता लोहितं रुधिरं पूयं पक्वरुधिरं ते द्वे अपि पक्तुं शीलमस्याः सा लोहितपूयपाचिनी कुंभी । पुनः किंभूता । बाल प्रत्यग्रोग्निस्तस्यतेजोभितापः सएव गुणोयस्याः सा बालाग्नितेजोभिताप

दुःखयंति निरतर मविश्रामं तत्र चिरस्थितिकं तं हन्यमानस्य नारकस्य नकिंचित्त्राण स्यात् । यथा शीतेऽेण लक्ष्मणस्य नरकदुःखमनुनवतस्त्राणोद्यतेनापि नत्राण कृतमिति एकः स्वयं प्रत्यनुनवति दुःख । यतो मया परिजनस्यार्थे, कृत कर्म सुदारुण ॥ एकाकी तेन दह्येह गतास्ते फलनोगिनइति ॥ २२ ॥

॥ टीका–अपिच ( सदाजलेत्यादि ) सदा सर्वकाल जलमुदकं यस्या सा तथा सदा जलानियाना वा नदी सरितिदुर्गा अतिविषमा प्रकर्षेण दिग्धि यमत्युष्ण क्षारपूयरुधिरावि लजल यस्या सा (पविज्जलेत्ति) रुधिराविलत्वात् पिच्छिला विस्तीर्णगनीरजला वा । अथवा प्रदीप्तजला वा। एतदेव दर्शयति । अग्निना तप्त सद्विलीन इवता गत यल्लोहमयस्त द्यत्ता ऽतितापविलीनलोहसदृशजलेत्यर्थ ।यस्या च सदाजलाया अनिदुर्गाया नद्या प्रपद्यमा ना (एगायत्ति) एकाकिनोऽत्राणाअनुक्रमण तस्या गमन प्लवन कुर्वतीति ॥ २१ ॥ सा प्रतमुद्देशकार्थमुपसहरन् पुनरपि नारकाणा दुःखविशेष दर्शयितुमाह ( एयाइफासाइइ त्यादि ) एते अनतरोदितकदयाश्चेत्यतिकटचोबालमशरण स्पृशयति दुःखयति निरत रमविश्राम (अच्छिनिमीलयमित्यादिपूर्ववत्) तत्र तेषु नरकेषु चिर प्रनूत काल स्थितिर्यस्य वालस्यासौ चिरस्थितिकस्त।तथाहि।रत्नप्रनायामुत्कृष्टा स्थिति सागरोपम तथा द्वितीया या शर्करप्रनाया त्रीणि तथा वालुकाया सप्त पकाया दश धूमप्रनाया सप्तदश तम प्रना या द्वाविंशतिर्महातम प्रनाया सप्तमपृथिव्या त्रयस्त्रिंशत्सागरोपमानि उत् त्कृष्टा स्थि तिरिति। तत्र गतस्य कर्मवशाऽपादितोत्कृष्टस्थितिकस्य परैर्हन्यमानस्य स्वकृतकर्मफलनुजो न किंचित्राण नवति । तथाहि।किल शीतेंऽेण लक्ष्मणस्य नरकदुःखमनुनवतस्तत्राणोद्य तेनापि न त्राण कृतमिति श्रुति । तदेवमेकोसहायोयदर्थ यत्पाप समर्जित तैरहित स्तत्कर्मविपाकज दुःखमनुनवति नकश्चिद्दुःखसविनाग गृह्णातीत्यर्थ । तथाचोक्तं । म या परिजनस्यार्थे कृत कर्म सुदारुण । एकाकी तेन दह्येह गतास्ते फलनोगिनइत्यादि ॥२२

जं जारिसं पुव्वमकासिकम्मं,तमेव आगछति संपराए॥ एगंतदुक्खं नव मज्जणित्ता, वेदंति दुक्खी तमणंतदुक्खं ॥ २३ ॥ एताणि सोच्चा णरगा णि धीरे, नहिंसए किंचण सव्वलोए ॥ एगंतदिठ्ठी अपरिग्गहेउ, बुज्झि ज्ज लोयस्सवसं नगछे ॥२४॥ एवं तिरिक्खे मणुया सुरेसु, चतुरंतणं तं त यणुविवाग ॥ ससवमेयं इति वेदइत्ता, कखेजकालं धुयमायरेज्जत्तिबेमि ॥ २५ ॥ इति श्रीनरयविनत्तीनाम पंचमाध्ययनसमत्त ॥

अत्यत क्रूर पापकर्मना धणी दु खवेदना भोगववाने घणोकाल सुधी त्या नरकने विषे रहे (जहाकडंकम्मतहासिभारे के०) यथारुतानिकर्माणि जेवा अध्यवसायेकरी जेवाजा वे कर्म कीधा होय तेवाज नरकमा पण सिभार शब्दे दु ख उपजे जेम मांस भ क्षण करनारने तेनाज शरीरमांथी मासकापी अग्नीवर्ण करी खवरावे, मद्यपानीने तप्त कथीरनो रस पीवरावे, मत्सघातकीने छेदे, भेदे, असत्य भाषण करनारनी जिव्हा छेदे, परधनापहारीना अगोपाग छेदे, लपटना वृषण छेदे, सालमली वृक्षनु आलिंगन करावे इत्यादिक जेणे जेवा कर्म उपार्ज्या होय तेने ते सरखाज दु ख परमाधार्मिको उपजावे ॥ २६ ॥ (समज्जिणित्ताकलुसअणज्जा के०) ते पापी अनार्य माता पिता अने स्त्रियादि कने अर्थे घणा कलुप एटले पापकर्म उपार्जन करीने पछी ( इठेहिकतेहियविप्पहूणा के०) इष्टजे मातापिता तथा काता एटले स्त्रियादिक ते थकी विप्पहूणा एटले रहित अर्थात् एकाकी छता (तेदुब्भिगधेकसिणेयफासेके०) ते दुर्भिगंध दु खे करी भर्यो तथा अशुभ स्पर्शवान एवा नरकने विषे (कम्मोवगाकुणिमेआवसतिके०) कर्मोपगता अशुभ क र्मने लीवे कुणि एटले मास पेसी रुधिर परु आतरमा फेफसुं इत्यादिक कस्मले करी समाकुल एवा नरक स्थानमां घणोकाल अवश्य पणे रहीने पूर्वोक्त दु ख सहन करे तिबेमिनो अर्थ पूर्ववत् जाणवो ॥२७॥इति नरकविभक्तियनाम प्रथमोद्देशकनुअर्थसमाप्त

॥ दीपिका-(पक्खिप्पेति) कुभीषु तान् आर्तस्वरान् करुण दीन रसत प्रक्षिप्य प्रप चति ते तृषार्ता सलिलं प्रार्थयंतस्तप्त त्रपु पाय्यते । पाय्यमानाश्चार्ततर रसंति गरटंति ॥ २५ ॥ ( आप्पेणेति ) इह नरके आत्मनैवात्मानं वचयित्वा भवानामधमाभवाधमा अधमभवामत्स्यवधलुब्धकादीना भवास्तान् पूर्वजन्मनि शतसहस्रश समनुभूय क्रूरक र्माणस्ते नरके बहुप्रभूतकाल तिष्ठति यथा येन प्रकारेण यादृशाध्यवसायेन पूर्वभवे रु तानि कर्माणि तथा से तस्य नारकस्य भारावेदना स्यु ॥ २६ ॥ (समज्जिणित्तेति) अ नार्या, पापकर्मकारिण कलुप पाप समर्ज्य अर्जयित्वा ते नारकादुरभिगंधिनरके वसं ति ।किंभूता ।इष्टै कातै शब्दादिविषयैर्विहीना।नरके किंभूते।कृत्स्ने सपूर्णेऽस्पर्शेऽत्यं ताशुभस्पर्शे कर्मोपगताआशु कर्मबद्धा कुणिमे रुधिराद्याकुले आसमताद्उत्कृष्टतस्त्रयस्त्रि शत्सागराणि वसतीति । ब्रवीमीति पूर्ववत् ॥ २७ ॥ इतिपंचमाध्ययनस्य प्रथमोद्देशक

॥ टीका-तासु च यक्रियते तदर्शयितुमाह । ( पक्खिप्पेत्यादि ) तासु प्रत्यग्निना दी प्तासु लोहितपूयशरीरावयवकिल्बिषपूर्णासु दुर्गंधासु च बालान्नारकास्त्राणरहितानार्त स्वरान् करुण दीन रसत प्रक्षिप्य प्रपचति तेच नारकास्तया कदर्थ्यमानाविरसमाक्रं दतस्तृषार्ता सलिल प्रार्थयंतोमद्य ते अतीव प्रियमासीदित्येव स्मरयित्वा तप्त यत्रपु

नुरूपं विपाक सबुद्धिमान् सर्वमेतदिति पूर्वोक्त विदित्वा ध्रुवं संयममाचरन् कालं काङ्क्ष
त् ।कोर्थ ।चतुर्गतिकससारे ड खमेव केवलं मत्वा सयमानुष्ठानरतोयावज्जीव मृत्युका
लं प्रतीक्षेत । इतिब्रवीमीति पूर्ववत् ॥ २५ ॥ इति पचमाध्ययने द्वितीयोदेशक ॥ ॥ इ
तितपोगच्छे श्रीहेमविमलसूरिशिष्यहर्षकुलपमितप्रणीताया श्रीसूत्रकृतागदीपिकाया नर
कविजक्तयाख्यं पंचमाध्ययन समाप्तं ॥ ॥

तथा सदा

॥ टीका–किचान्यत् ( जलारिसमिस्यादि ) यत्कर्म यादृग यदनुभा द्वारपूयरुधिरवि
वा कर्म पूर्वं जन्मांतरे अकार्षीत् कृतवास्तत्तादृगेव जघन्यमध्यमोत्कृष्ट ला वा । अथवा
सपराये तथा तेनैव प्रकारेणानुगच्छति । एतडुक्त भवति । तीव्रमद यल्लोहमयस्त छन्न
स्थानैर्यादृशैर्यद्बद्ध तत्तादृगेव तीव्रमदमध्यमेव विपाकमुदय गच्छतीति गाया नद्या प्रपद्यमा
खलेशरहित ड खमेव यस्मिन्नरकादिके भवे सतथा तमेकातड ख भव नीति ॥ २१ ॥ सां
वोपादानभूतानि कर्माण्युपादायैकातड खिनस्तत्पूर्वनिर्दिष्ट ड खमसातवे ( एयाइफासाइ
दयत्यनुभवतीति ॥२३॥ पुनरप्युपसहारव्याजेनोपदेशमाह ।(एयाणिसोच्च खयति निरंत
न्पूर्वोक्तान्नरकान् स्वास्थ्या ढ्यपदेशइतिकृत्वा नरकड खविशेषान् श्रुत्वा नि न्मियतिर्यस्थ
या राजतइति धीरोबुद्धिमान् प्राज्ञ ।एतत्कुर्यादिति दर्शयति।सर्वस्मिन्नपि त्र तथा द्वितीया
न्ने लोके प्राणिगणे नकमपि प्राणिन हिस्यान्नव्यापादयेत् । तथैकातेन निभ्रय दृश तम प्रभा
दृष्टि सम्यक् दर्शन यस्य सएकातदृष्टिर्निष्प्रकपसम्यक्त्वइत्यर्थ । तथा नविद्य त्कृष्टा स्थि
न्सुखार्थं गृह्यतइति परिग्रहोयस्य सावप्यपरिग्रह ।तुशब्दादाद्यतोपादाना द्वा मृषा फलभुजो
दानमैथुनवर्जनमपि द्रष्टव्य । तथा लोकमशुभकर्मकारिणं तद्विपाक फलं भुजन् तत्राणोद्य
कषाय लोक तत्स्वरूपतोबुध्येत जानीयान्नतु तस्य वश गच्छेदिति ॥२४॥ एतदनंतर तरहित
विशेष मन्यत्राप्यतिदिशन्नाह।(एवमित्यादि) एवमशुभकर्मकारिणामसुमतां तिर्यङ्क । म
मरेष्वपि चतुरत चतुर्गतिकमनतमपर्यवसान तदनुरूप विपाक स बुद्धिमान् सर्वमे॥२५
पूर्वोक्तया नीत्या विदित्वा ज्ञात्वा ध्रुव सयममाचरन् काल मृत्युकालमाकाङ्क्षेत् । ए
भवति । चतुर्गतिकससारातर्गतानामसुमतां ड खमेव केवल यतोध्रुवोमोक्ष सय
तदनुष्ठानरतोयावज्जीव मृत्युकाल प्रतीक्षेतेति । इति परिसमाप्तौ । ब्रवीमीति पूर्ववत् ॥२५॥
इतिपचम नरकविभक्त्यध्ययन परिसमाप्त ॥

अथ द्वितीये सूत्रकृतागे पष्ठमध्ययन प्रारभ्यते।पांचमा अध्ययनने विषे नरकना ड ख
कह्या ते श्रीमहावीरदेवे उपदेश्या छे ते माटे आ छठा अध्ययनने विषे श्री महावीर
परमात्मानी गुणो त्किर्तनीपूर्वक स्तुति करेछे

रादिनिर्नरकानुनावाच्च मुमूर्षवोप्यत्पतपिष्टाअपि न म्रियंते ऽपितु पारदवन्मिलंतीति॥ए॥ अपिच ( तिरकाहीत्यादि ) पूर्वडुष्कृतकारिण तीक्ष्णानिरयोमयीनि शूलानिरनेकपा लानारकमनितापयति । किमिव । वशमुपगतं श्वापदमिव । कालपृष्ठसूकरादिकं स्वा तन्त्र्येण लब्ध्वा कदर्थयंति ते नारका शूलादिनिर्विद्धाअपि नम्रियते केवल करुण दीन स्तनंति । नच तेषा कश्चित्त्राणायाल । तथैकातेनोनयतोतर्वहिश्च ग्लानाअपगतप्रमोदा सदा डुखमनुनवतीति ॥ १० ॥

सया जलं नाम निह महंतं, जसी जलतो अगणी अकहो ॥
चिठति बद्धा बहुकूरकम्मा, अरहस्सरा केइ चिरठितीया ॥
॥११॥ चिया महतीउ समारनित्ता,बिप्नति ते त कलुण रसंतं ॥
आवट्टती तह असाहुकम्मा, सप्पी जहा पडियं जोइमझे ॥१२॥

अर्थ-( सयाजलनाम के० ) सर्व काल निरतर जलतु बलतु एवे नामे ( निहंके० ) ज्या प्राणीने हणीये ते ( महत के० ) मोहोटुं स्थानकठे ( जसीजलतोअगणी अकठो के० ) जे स्थानके काष्ट रहित अग्नि प्रज्वलेठे त्या ( बद्धाबहुकूरकम्मा के० ) घणा कूरकर्मे बाध्या थका घणा कालसुधी ( चिठतिके० ) रहे केवा थका तिष्टे तोके ( अरह स्सराकेइ के० ) मोहोटा बीहामणा आक्रद स्वर करता थका तथा ( चिरठितीयाके० ) घणाकाल नी स्थितीने जेमनी एवा थका रहे ॥ ११ ॥ ( चियामहतीउ के० ) ते पर माधार्मिक त्या नरकने विषे मोहोटी अग्नीनी चिता ( समारनित्ता के० ) समारनीने तेमा अनेक काष्ट प्रक्षेपीने ( बिप्नतितेतकलुणरसतके० ) तेमाहे नारकीनेनाखे ते त्या दा झता थका करुण स्वरे आक्रद करता ( तहके० ) त्या ते चितामाहे गयाथका (असाहुक म्माके०)असाधुकर्मना करनार एवा नारकी (आवट्टतीके०) आवर्त्ते,विलय थइ जाय कोनी पेरे तोके ( जहाके० ) जेम ( सप्पि के० ) घृत ते (जोइमझेके०) ज्योतिजे अग्नी तेमा हे (पडियके०) पड्यो थको विलय थइ जाय तेनीपेरे विलयथाय परतु घृततो अग्नीमाहे सर्वथा बली जाय पण नारकी जीव ते अग्नीमा मरण पामेनही ॥ १२ ॥

---

॥ दीपिका-( सयेति ) सदा ज्वलद्दीप्यमान स्थान । किंनूत । निहन्यंते प्राणिनोयस्मि न् निहमाघातस्थान महद्विस्तीर्णमस्ति ।यस्मिन् स्थानेऽकाष्ठोग्निर्ज्वलन्नास्ते । तत्र बहुकू रकर्माण केचिच्चिरस्थितिकाअरहस्सराबृहदाक्रंदशब्दास्तिष्ठंति ॥ ११ ॥ ( चियेति ) महतीश्चिता. समारभ्य नरकपालास्ते तं नारकं करुणं दीन रससमाक्रदतं तत्र

॥टीका–उक्त पंचममध्ययन ।अधुना षष्ठमारभ्यते । अस्य चाऽयमभिसंबंध ।अत्रानंतरा ध्ययने नरकविभक्ति प्रतिपादिता । सा च श्रीमन्महावीरवर्धमानस्वामिनाऽभिहितेत्यत स्तस्यैवाऽनेन गुणकीर्तनद्वारेण चरितं प्रतिपाद्यते । शास्तुर्गुरुत्वेन शास्त्रस्य गरीयस्त्वमि ति कृत्वेत्यनेन संबंधेनाऽऽयातस्याऽस्याऽध्ययनस्योपक्रमादीनि चत्वार्यनुयोगद्वाराणि । तत्राऽप्युपक्रमांतर्गतोऽर्थाधिकारोमहावीरगुणगणोत्कीर्त्तनरूप ।निक्षेपस्तु द्विधा । ओघनिष्प न्नोनामनिष्पन्नश्च । तत्रौघनिष्पन्ने निक्षेपे ऽध्ययन । नामनिष्पन्नेतु महावीरस्तव. । तत्र म हच्छब्दस्य वीरइत्येतस्य स्तवस्यच प्रत्येक निक्षेपोविधेय । तत्रापि यथोद्देशस्तथानिर्देश इतिकृत्वा पूर्वं महच्छब्दोनिरूप्यते । तत्राऽस्त्ययऽय महच्छब्दोबहुत्वे । यथा महाजनइति अस्तिबृहत्त्वे । यथा महाघोषोऽस्तीत्यर्थं यथा महानयमित्यऽस्ति प्राधान्ये यथा महापु रुषइति । तत्रेह प्राधान्ये वर्तमानोगृहीतइत्येतन्निर्युक्तिकारोदर्शयितुमाह । पाहन्नेमहसद्दो, दव्वे खेत्ते य कालभावेय ॥ वीरस्सउणिक्खेवो चउक्कउहोइणायव्वो ॥१॥ पाहन्नेमहसद्दोऽस्यादि तत्र महावीरस्तवइत्यत्र योमहच्छब्द सप्राधान्ये वर्तमानोगृहीत । तच्च नामस्थापना द्रव्यक्षेत्रकालभावभेदात् षोढा । प्राधान्ये नामस्थापने क्षुण्णे द्रव्यप्राधान्य ।ज्ञशरीरभव्य शरीरव्यतिरिक्त सचित्ताचित्तमिश्रभेदात् त्रिधा । सचित्तमपि द्विपदचतुष्पदे नरहस्त्यश्वा दिकमपदेषु प्रधान कल्पवृक्षादिक । यदि वेहैव ये प्रत्यक्षारूपरसगंधस्पर्शैस्तकृष्टा पौंड रीकादय पदार्था । अचित्तेषु वैडूर्यादयोनानाप्रभावमणयोमिश्रेषु तीर्थकरोविभूषित इति । क्षेत्रत प्रधानासिद्धिर्धर्मश्रयणान्महाविदेह चोपभोगांगीकरणेन तु देवकुर्वादि क क्षेत्र कालत प्रधान त्वेकांतसुषमादि । योवा कालविशेषोधर्मचरणप्रतियोग्यइति । भावप्रधानतु क्षायिकोभावस्तीर्थकरशरीरापेक्षयौदयिकोवा । तत्रेह द्वयेनाऽप्यधिकारइ ति । वीरस्य द्रव्यक्षेत्रकालभेदाच्चतुर्धा निक्षेप । तत्र ज्ञशरीरभव्यशरीरव्यतिरिक्तोद्रव्य वीरोद्रव्यार्थं संग्रामादावद्भुतकर्मकारितया शूरोयदिवा यत्किंचित् वीर्यवद् द्रव्य तद् द्र व्यवीरऽतर्भवति । तद्यथा। तीर्थकृदनंतबलवीर्योलोकमलोक कंडुकवत् प्रक्षेप्तुमल । तथा मंदर दंडं कृत्वा रत्नप्रभा पृथिवी छत्रवद्बिभृयात् ।तथा चक्रवर्तिनोपि बल दोलोभावत्तीसा। तथा विषादिना मोहनादिसामर्थ्यमिति । क्षेत्रवीरस्तु योयस्मिन् क्षेत्रेऽद्भुतकर्मकारी वीरोवा यत्र वर्ण्यते । एव कालेऽप्यायोज्य । भाववीरोयस्य क्रोधमानमायालोभै परीष हादिभिश्चात्मनोजेता । तथाचोक्त । कोहं माणं च मायं च, लोभं पचेंद्रियाणिय ॥ दुज्जयचेव अप्पाणं सव्वमप्पेजिएजिय ॥ १ ॥ योसहस्ससहस्साणं सगामेदुज्जयेजिणे । एकजिणेज्जअप्पाणं एसेसपरमोजउ ॥ २ ॥ तथा । एक्कोपरिभमउजए, वियडंजिणकेसरीमज्जीजाए ॥ कदप्पदुद्दाढो मयणोविद्दारिउजेण ॥३॥ तदेव वर्धमानस्वाम्येव परी षहोपसर्गैरनुकूलप्रतिकूलैरपराजितोऽद्भुतकर्मकारित्वेन गुणनिष्पन्नात् भावतोमहावीर

श्रति दुखमेव धर्मः स्वभावोयस्मिन् तत्तथा । एवविधे स्थाने नारकं हस्तै पादैर्बध्वा त त्र प्रक्षिपंति क्षिप्त्वाच शत्रुमिव दंमै समारभते ताडयति ॥ १३ ॥ ( भंजतित्ति ) बा लस्य नारकस्य व्यथेन लकुटादिप्रहारेण पृष्ठं भजंति अयोघनैर्लोहघनैः शीर्षं भिंदंति चूर्णयत्ति । अपिशब्दादन्यान्यप्यंगानि चूर्णयंति । ते भिन्नदेहानारका फलकमिवोभा भ्या पार्श्वाभ्या क्रकचादिनावतष्टाद्विधाकृतास्तप्तानिराराभि· पीडयमानास्तत्रपुपानादि के कर्मणि नियोज्यंते व्यापार्यंते ॥ १४ ॥

---

॥ टीका–अथायमपरोनरकयातनाप्रकारस्तमाह । ( सयाकसिणमित्यादि ) सदा स र्वकालं कृत्स्नं सपूर्णं पुनरपर घर्मस्थानमुष्णस्थान दृढैर्निधत्तनिकाचिकावस्थै कर्मभिरु पनीतं ढौकितमतीव दुःखरूपोधर्मः स्वभावोयस्मिस्तदतिदुःखधर्मं तदेवंभूते यातनास्था ने तमत्राण नारकं हस्तेषु पादेषु च बध्वा तत्र प्रक्षिपति । तथा तदवस्थमेव शत्रुमिव दंडै समारभते ताडयंति ॥ १३ ॥ किंच । ( भजतिबालस्सेत्यादि ) बालस्य वराकस्य नारकस्य व्यथयतीति व्यथोलकुटादिप्रहारस्तेन पृष्ठ भजयंति मोटयंति तथा शिरोप्य योमयेन घनेन भिदति चूर्णयत्यपिशब्दादन्यान्यप्यंगोपागानि द्रुघणघातैश्चूर्णयंति । ते नार कानिभिन्नदेहाश्चूर्णितागोपागा· फलकमिवोभाभ्या पार्श्वाभ्या क्रकचादिना अवतष्टास्तनूकृता· सतस्तप्तानिराराभि प्रतुद्यमानास्तत्रपुपानादिके कर्मणि विनियोज्यते व्यापार्यतइति ॥ १४

अभिजुंजिया रुद्द असाहुकम्मा, उसुचोइया हत्थिवहं वहंति ॥ ए
गं दुरूहित्तु डुवे ततोवा, आरुस्स विज्झति ककाणउसो ॥ १५ ॥
बाला बलाभूमिमणुक्कमंता, पविज्जलं कंटइलं महंतं ॥ विव
द्धतप्पेहिं विवणचित्ते, समीरिया कोट्टबलिं करिंति ॥ १६ ॥

अर्थ–( अभिजुंजिया रुद्द असाहुकम्माके० ) रौद्र एवा असाधु कर्मि एटले अन्य नार कीउने हणवादिक कार्ये पापना करनार अथवा पूर्व भवना करेला एवा रौद्र अ साधु कर्म तेने प्रेरता थका एटले पूर्वकृत दुष्कृतने स्मरण करावीने ( उसुचोइया ह त्थिवहंवहंति के० ) सरानिघात एटले बाणादिके करी जेम हस्तिने चलाविये वाहिये तेम ते परधार्मिको माहावतनी पेरे ते नारकीउने वाहे अथवा उंटनी पेरे वाहे एटले चलावे ( एगंदुरुहित्तुडुवेततोवा के० ) तेना उपर एक बे अथवा त्रणरुपे आरुढ थइ ने दुःख आपे (आरुस्सविज्झतिककाणउसोके०) क्रोधेकरीने ककाणउ एटले तेना मर्म स्थानकने आरादिकेकरी विंधे॥१५॥ ( बालाके० ) अज्ञ एवा नारकीने ( बलाके० ) बला त्कारे करी ( पविज्जलं के० ) रक्त अने परु तद्रूप रौद्र कर्दमे करी विषम तथा

यथाश्रुतं त्वया श्रुत्वा च यथानिशांतमित्यवधारित यथा दृष्ट तथा सर्व ब्रूह्याचक्ष्वेति ॥२॥

खेयन्नेसे कुसले (सुपन्नेपा०) महेसी, अणतनाणीय अणंतदसी॥
जसस्सिणो चक्कुपहठियस्स, जाणाहि धम्मंच धिइ पेचहि
॥ ३ ॥ उड्ढं अहेयं तिरियं दिसासु, तसाय जे थावर जेह पाणा॥
सेणिच्चणिच्चेहि समिक्ख पन्ने, दीवेव धम्म समिय उदाहु ॥ ४ ॥

अर्थ–एम श्री सुधर्म स्वामिने पुछ्या थका सुधर्मस्वामि श्री महावीर देवना गुण क हेने (सेके०) ते श्री महावीरदेव (खेयन्नेके०) खेदज्ञ एटले ससारी जीवोने कर्म वि पाक थकी उत्पन्न थयु जे खेद एटले दुःख तेने जाणे जाणीने उपदेश आपी तेना दुःख टालवाने सामर्थवान तथा (कुसले के०) कर्म विदारवाने निपुण अने (महेसी के०) महोटा रूपीश्वर साधु तथा (अणतनाणीय के०) अनत अविनाशी जेनुं ज्ञान प्रगटयुछे (अणतदसीके०) अनत अविनाशी जेमनु दर्शन प्रगटयु छे (जसस्सिणोके०) यशस्वी एटले जेनो यश त्रण भुवनमा व्याप्योछे (चक्कुपहठियस्स के०) लोकने च क्षुभूत समानछे केमके लोकना भावना जे भेद ते सर्व परिछेदे माटे लोकने चक्षुने स्थानके वर्तेछे (जाणाहि धम्मच के०) एवा श्री महावीर प्रणीत जे श्रुत चारित्ररूप धर्म तेने धर्म जाणो (धिइच के०) तथा तेज सयमने विषे धृति एटले धैर्यपणु तेप ण श्रीमहावीरनोज (पेहि के०) प्रेक्ष्यो एटले देखो एटले श्रुत चारित्ररूप सयमने विषे जेहने रतिछे धैर्यछे ॥ ३ ॥ (उड्ढअहेयतिरियदिसासु) के० उचोनीचो अने ति र्छो एटले चौदराज लोक माहे पूर्वादिक अढार द्रव्य दिशाउ अने अढार भावदिशाउ मध्ये (तसायजेथावरजेहपाणा के०) जे बेंड्रियादिक त्रस प्राणी अने एकेंद्री पृथवि यादिक जे स्थावर प्राणीउछे (सेणिच्चणिच्चेहिसमिक्खपन्ने के०) तेने भगवत नित्या नित्य भेदे द्रव्य पर्याय भेदे सम्यक् प्रकारे जाणे एवा श्रीमहावीर वीतराग देव ते णे ससार समुद्र माहे पडता बुडता प्राणीने (दीवेव के०) द्वीप समान एवो (समि यं के०) समभावि (धम्म के०) धर्म (उदाहु के०) कह्यो छे ॥ ४ ॥

॥ दीपिका–सभगवान् वीर खेद प्राणिना कर्मविपाकज दुःख जानातीति खेदज्ञ कुश लोनिपुणोमहर्षिस्तपश्चरणानुष्ठायी अनतज्ञानी अनतदर्शीच । विशेषग्राहक ज्ञानं सा मान्यग्राहक दर्शन तेद्वेअपि यस्यानते तस्य यशस्विनोजगवतोलोकस्य चक्षु पथे लो चनमार्गे स्थितस्य भवस्थकेवलिनइत्यर्थ । तस्य धर्म ससारतारणसमर्थ धृतिंच संय मनिश्चलतां जानीषे । तत (पेहित्ति) कथय । अथवा तथैवेति यथा धर्मस्तथा धृतिरपी

डुक्कडिणो थणंति, अहोय राउ परितप्पमाणा॥ एगंतकूमे नरए महंते, कूमेण तत्था विसमे हताउ ॥ १७ ॥

अर्थ–अहीं नाम शब्द सन्नावनाने अर्थे जाणवो (वेयालिए के०) विकूर्व्यो एवो (महानितापे के०) माहा दुःखनु कारण (एगायते के०) घणो लांबो एवो (पव्वयके०) पर्वत नरकमाहे (अंतरिक्खे के०) आकाश पर्यंत उंचोविकुर्वे निष्पादे (तहाके०) त्या ते पर्वत उपरथी (बहूकुरकम्मा के०) अत्यंत पापकर्मना करनार एवा घणा नारकी पडता थका अंधकाररूपे दृष्टीये कांइ पण देखे नही परंतु हस्त स्पर्श मात्रे थाय अने चडता थका तो परमाधार्मिक तेने (हम्मति के०) हणे पीडा आपे त्या (परसहस्साणमुहुत्तगाणके०) हजार थकी घणा मूहुर्त्त अधिक एटले उपलक्षणथी घणा काल सुधीएवु दुःख पामे ॥ १६ ॥ (डुक्कडिणो के०) ते नारकी माहा पाप कर्मना करनार ते (सबाहिया के०) सबाधित्ता एटले अत्यंत पीडया थका (थणंति के०) आक्रंद करे (अहोयराउपरितप्पमाणा के०) अहोरात्र परितप्तमान थका करुण आक्रंद करे (एगतकूमे नरएमहत्ते के०) एकांत एटले निश्चयरूप कूट एटले दुःखोत्पत्तिनु स्थान ज्याहे एवु महत एटले विस्तीर्ण नरकने विषे (कूमेण तत्था विसमेहताउ के०) त्या विषम कूट पासादिक गलयत्रादिके करी हणाता थका आक्रंद करे ॥ १७ ॥

॥ दीपिका–(वेयालिएत्ति) नामेति संजावने। सन्नाव्यते यन्नरकेषु। यथांतरिक्षे महानितापे महादुःखे एकशिलाघटितोदीर्घ. (वेयालिएत्ति) वैक्रय परमाधार्मिकनिष्पादित पर्वतस्तत्र हस्तस्पर्शिकया समारूहतोनारकाबहुकूरकर्माणोहन्यते पीडयंते सहस्रसंख्याना मुहूर्तानां परं प्रकृष्टं कालं प्रनूत कालं हन्यंतेइत्यर्थः ॥१६॥ (सबाहियाइति) डुष्कृत वियते येषाते डुष्कृतिन सबाधिता पीमिताअहनि रात्रौ च परितप्यमानाएकातेन कूटानि दुःखोत्पत्तिस्थानानि यस्मिन् तथा तस्मिन् एवंविधे महति नरके कूटेन गलयत्रपाशादिना तत्र विषमे हता सुनिश्चितं स्तनति ॥ १७ ॥

॥ टीका–(किंच। वेयालिए इत्यादि) नामशब्द सन्नावनाया। सन्नाव्यते एतन्नरकेषु यथांतरिक्षे महानितापे महादुःखैककार्येएकशिलाघटितोदीर्घ (वेयालिएति) वैक्रियः परमाधार्मिकनिष्पादित पर्वतस्तत्र तमोरूपत्वान्नारकाणामतोहस्तस्पर्शिकतया समारूहतोनारकाहन्यते पीडयंते बहूनि क्रूराणि जन्मांतरोपात्तानि कर्माणि येषां ते तथा सहस्रसंख्याना मुहूर्तानां परं प्रकृष्टं कालं सहस्रशब्दस्योपलक्षणार्थत्वा त्प्रनूत कालं हन्यंतइति यावत् ॥१६॥ तथा। (सबाहियाइत्यादि) समेकीनावेन बाधिताः

तथाचोक्तं । जहापुसुस्सकछइतहातुछस्सकछइइत्यादि सम वा धर्ममुत्प्राबल्येनाऽऽह उक्तवान् । प्राणिनामनुग्रहार्थं न पूजासत्कारार्थमिति ॥ ४ ॥

से सवदसी अभिभूयनाणी, णिरामगंधे धिइमं ठितप्पा ॥ अणु
त्तरे सव जगंसि विज्जं, गंथा अतीते अभए अणाऊ ॥ ५ ॥ स
भूइपन्ने अणिए अचारी, उहतरे धीरे अणंतचक्कू ॥ अणुत्तरे
तप्पति सूरिएवा, वइरोयणि देवतम पगासे ॥ ६ ॥

अर्थ–( सेके० ) ते भगवंत ( सवदसीके० ) सर्वदर्शी एटले लोकालोकने देखनार वली ( अभिभूतनाणी के० ) बावीश परिसहने जीतवा थकी केवल ज्ञानी थया ( णिरामगंधेके० ) निरामगंध एटले मूलोत्तर गुण विशुद्ध संयम पालक तथा ( धिइमके० ) धैर्यवंत ( ठितप्पाके० ) स्थितात्मा एटले समस्त कर्मना क्षय थकी आत्म स्वरूपमांज जे स्थित थयाछे तथा ( अणुत्तरेसवजगंसिविज्ज के० ) अनुत्तर एटले प्रधान सर्व जगतमा निरुपम ज्ञाता माटे विद्वान् एटले भली बुधिवंतछे तथा (गथाअतीतेके०) ग्रंथ थकी अतीत एटले निग्रंथ बाह्याभ्यंतर परिग्रह रहितछे ( अभएके० ) सप्त भय रहितछे तेना नाम कहेछे पेहेलुं इहलोकभय बीजुं परलोकभय त्रीजुं आदान भय चोथुं अकस्मात् भय पांचमुं वेदना भय छठुं अपकीर्त्तिभय सातमुं मरण भय तथा ( अणाऊ के० ) चारप्रकारना आयुकर्म करी रहितछे ॥ ५ ॥ ( सके० ) ते भगवंत ( भूइपन्ने के० ) भूति प्राज्ञ एटले अनंत ज्ञानी तथा ( अणिएअचारी के० ) अप्रतिबद्ध विहारी जाणवा (उहतरेके०) उंघ एटले संसाररूप समुद्रने तरनार (धीरेके०) धीर एटले निश्चल (अणंतचक्कु के० ) अनंत ज्ञानरूप चक्षुना धरनार ( अणुत्तरेतप्पतिसूरिएवा के० ) जेम सूर्य सर्व थकी अधिक तपे तेम भगवंत ज्ञाने करी सर्व थकी उत्तम प्रधानछे (वइरोयणिदेवतमपगासे के० ) तथा वैरोचनेंद्र एटले अग्नी जेम अंधकारने दूर करी अधिक प्रकाशकरेछे तेम श्रीमहावीर यथावस्थित पदार्थना प्रकाशक जाणवा ॥ ६ ॥

॥ दीपिका–ससर्वदर्शी अभिभूय द्वाविंशतिपरीषहान् पराजित्य ज्ञानं च केवलाख्यं विद्यते यस्य सज्ञानी निर्गतआमोविशोधिकोटिरूपोगंधोयस्मात्सनिरामगंधः । मूलोत्तर गुणविशिष्टचारित्रइत्यर्थः । धृतिमान् स्थैर्यसंपन्नः स्थितात्मा निर्मलात्मा अनुत्तरउत्कृष्टः सर्वस्मिन्नजगति विद्वान् सर्वपदार्थवेत्ता ग्रंथाद्बाह्याभ्यंतरपरिग्रहादतीतोनिर्ग्रंथइत्यर्थः । अभयः सप्तभयरहितः । नविद्यते चतुर्विधमप्यायुर्यस्यासावनायुः ॥५॥ भूतिशब्दोत्र वृद्धौ । भूतिप्रज्ञोवृद्धप्रज्ञो ऽनंतज्ञानइत्यर्थः । अनियतचारी उघं संसारं तरतीति उ

न्मांतरवैरिणइव परमाधार्मिकायद्विवा जन्मांतरापकारिणोनारकाश्चपरेपामंगानि सरोष सकोप समुजराणि मुसलानि गृहीत्वा नजति गाढप्रहारैरमर्दयंति तेच नारकास्त्राण रहिता शस्त्रप्रहारैर्भिन्नदेहारुधिरमुद्वहतोऽधोमुखाधरणितले पततीति ॥ १९ ॥ किंच (अणासियाइत्यादि) महादेहप्रमाणामहांत शृगालानरकपालविकुर्विताश्चन शितावुचुक्षिता । नामशब्द सनावनाया । संनाव्यतएतन्नरकेषु । अतिप्रगल्भिताअति धृष्टारौद्ररूपानिर्नयास्तत्र तेषु नरकेषु संनवति । सदावकोपानित्यकुपितास्तैरेवनूतै सृगालादिनिस्तत्र व्यवस्थिताजन्मांतरकृतबहुक्रूरर्माण शृखलादिनिर्बद्धाअयोमयनिगड निगडिताअदूरगा परस्परसमीपवर्तिनोनद्यते खडश खाद्यतइति ॥ २० ॥

सयाजला नाम नदी जिडुग्गा, पविज्जल लोहविलीणतत्ता ॥
जंसी जिडुग्गंसि पवज्जमाणा, एगायताणुक्कमणं करंति ॥२१॥
एयाइं फासाइ फुसति बाल, निरंतर तञ्च चिरडितीयं ॥ ण ह
म्ममाणस्स उ होइ ताण, एगोसय पच्चणु होइ डुक्ख ॥ २२ ॥

अर्थ–(सयाजला नाम नदीजिडुग्गा के०) ते नरकने विषे सदाकाल पाणीए जरपूर एवी महाविषम नदीरूप स्थानछे अंहीं नाम शब्द सनावनायेछे तेमां (पविज्जलोह विलीणतत्ता के० ) अग्नीमां गल्यो एवो लोहनो गोलो तेना सरखु उस पाणीछे जे पाणी पीता थका घणुं खारुं तथा उम्म लागे माटे विषमछे (जसीजिडुग्गंसि पवज्जमा णा के० ) जे एवी विषम नदी तेने विषे ते नारकी प्रेरचा थका जाता थका हालता थका ( एगाय ताणुक्कमण करति के० ) एकाकी अशरण प्लवन करता परवश पड्या थका डुःख जोगवे ॥ २१ ॥ ( एयाइ के० ) ए पूर्वोक्त बन्ने उद्देशामां जे नारकीना डुःख कह्यां तेने ( बालंके०) बाल अज्ञानी एवा नारकीना जीवो ते ( फुसंतिके०) फरसे छे सहन करेछे (निरतर तञ्च चिरडितीय के० ) जेनी निरतर घणा काल सुधी रेहेवानी स्थितिछे एवा नारकी त्यां (णहम्ममाणस्स उहोइत्ताणके०) हणाता थका तेने कोइपण त्राण सरण एटले राखवाने समर्थ नथी ( सयके० ) पोते ( एगो के० ) एकलो थकोज ( पच्चणुहोइडुक्खं के० ) नाना प्रकारना पोताना उपार्ज्यां डुःख जोगवे ॥ २२ ॥

॥ दीपिका–सदा जलं यस्या सा सदाजला नाम नदी अनिडुर्गा विषमा पविज्जला रुधिरादिपिच्छिला अग्नितप्तं सद्विलीन ड्वीनूत यल्लोह तद्वत्तथा ड्वीनूततप्तलोहजलेत्यर्थः । यस्या नद्यां प्रपद्यमानानारकाएकाकिनोऽत्राणाअनुक्रमण गमन कुर्वंति ॥ २१ ॥ एते पूर्वोक्ता स्पर्शाड्खविशेषा परमाधार्मिककृता स्वानाविकाश्च बालं नारकं स्पृशंति

अर्थ-(अणुत्तरधम्ममिणजिणाण के० ) जे श्रीऋषनादिक प्रनावंवत तीर्थंकरो त तु सबधी जे निरुपम धर्म तेनो नायक एटले तेने ( णेया के० ) जाणे एवा ( मुणी के०) चारित्रवान ( कासव के० ) काश्यपगोत्री श्रीमहावीर ( आसुपन्ने के० ) वता वली प्रज्ञानो जाण ( इंदेवदेवाणमहाणुनावे के० ) जेम इंद्र हजारो देवतानो नायक महाप्रनाववत देवो माहे प्रधान तेम श्री महावीर केवलज्ञानी ( सहस्सणेतादिविण विसिठे के० ) सहस्र पुरुषोमा देवताना नायक जेइंद्रतेनी पेरे विशिष्ट माहानुनाव जाणवा ॥ ७ ॥ ( सेके० ) तेनगवत ( पन्नयाअक्खयसागरेवा के० ) प्रज्ञाये एटलेबुद्धि ये करीने अक्षयछे वा शब्द विशेषणने अर्थछे कोनी पेरे तोके जेम समुद्र जे ( महो दहीवावि के० ) महोदधी एवो स्वयनुरमण समुद्र ( अणंतपारे के० ) निर्मल जेनु ज लछे इत्यादिक गुणे करी अनतअपारछे तेम श्रीवीरपण ( अणाइलेया के० ) अकलुप अकषाइ थका ( निरकू के० ) निक्षाये आजीविका करेछे यद्यपि नि शेष कर्मक्षय करी त्रैलोक्यने पूज्यछे तथापि निक्षाये आजीवेछे परतु अक्षीणमाहानसी प्रमुख लब्धीने प्रयुजता नथी एवा अनेक गुणयुक्त श्रीमहावीरदेवछे तथा ( सक्केवदेवाहिवईजुईम के० ) शक्रेंद्र देवताना स्वामी तेनी पेरे दीप्तिमान्छे ॥ ८ ॥

॥ दीपिका-अनुत्तर धर्मजिनानामृषनादिना सबंध्यय मुनि श्रीवीरोनेता प्रणेता काश्य पोगोत्रेण। आशुप्रज्ञ केवली। नेताइति ताच्छीलिकस्तृन । तद्योगे नलोकाव्ययेतिषष्ठीनि षेधात्कर्मणिद्वितीया । यथा इंद्रोदेवसहस्राणा मध्ये महानुनाव । ण वाक्याल कारे। दिवि स्वर्गे विशिष्टोरूपबलादिनि । एव स नगवान् सर्वेन्योविशिष्टोनेता ॥७॥ सनग वान प्रज्ञयाक्षयोऽक्षीणज्ञानइत्यर्थ । यथा महोदधि सागर स्वयनुरमणोऽवानंतपा रोविस्तीर्णगनीरजलोऽक्षोन्यश्चानाविलोऽकलुषजलस्तथा नगवानपि अकलुषोपि मुक्त क र्मबधात् यथा शक्रोदेवधिपतिर्द्युतिमान दीप्तिमान् ॥ ८ ॥

॥ टीका-किंच ( अणुत्तरमित्यादि ) । नाऽस्योत्तरोऽस्तीत्यनुत्तरस्तमिममनुत्तर धर्म जिनानामृषनादितीर्थकृता सबधिनमय मुनि श्रीमान वर्धमानाख्य काश्यपगोत्रेणाशु प्रज्ञ केवल [illegible] ज्ञानोनेता प्रणेतेति । ताच्छीलिकस्तृन् तद्योगे नलोकाव्य [illegible] मित्यत्र कर्मणिद्वितीयैव । यथा चंद्रोदिवि स्वर्गे देवसह [illegible] । णमितिवाक्यालकारे । तथा नेता प्रणायकोवि [illegible] नगवानपि सर्वेन्योऽपि विशिष्ट प्रणायकोमहानु [illegible] ) असौ नगवान् प्रज्ञायतेऽनयेति प्रज्ञा त [illegible] प्रतिहन्यते वा । तस्य हि बुद्धि वलके

अर्थ—(जहारिसंपुव्वमकासिकम्मके०) जे जीवे जेवाजावे पाछला जन्मातरे कर्म कीधाछे (तमेव के०) ते कर्म तेवीज विधियें (संपराए के०) ससारमा जमता थका चारगति नेविषेजीवने (आगच्छतिके०) उदय आवे (एगतदुक्खंजवमज्जणित्ताके०) परतु नरकमाहे तो एकात नि केवल दु खरूप जव उपार्जीने (वेदतिदुक्खीतमणतदुक्ख के०) ते नारकी जीव दु खी थका अनत दु ख वेदे ॥ २३ ॥ हवे उपदेश स्वरूप कहेछे (एताणि के०) ए पूर्वोक्त (णरगाणिसोच्चा के०) नरकना तीव्र दु ख साजलीने (धीरेके०) जे धैर्यवत पुरुषछे ते शु करे ते देखाडेछे (नहिंसएकिंचण सव्वलोए के०) जेथकी नरकना दु ख न जोगवे एवा सर्व चतुर्दश रज्ज्वात्मक लोकने विषे जेकाइ त्रस अने स्थावर जीवछे तेकोइने हणे नही तथा (एगतदिठीके०) एकात दृष्टी एटले निश्चल सम्यक्त्व धारक तथा (अपरिग्गहेउ के०) परिग्रह रहित एवो हतो तु शब्दथी मृषावादादिकनु वर्जन पण जाणी लेवु तथा (लोयस्स के०) लोक ते इहा प्रस्तावथकी अशुज कर्मकारी लेवो तथा कषाय लोक लेवो तेना स्वरूपने (बुज्झिज्जके०) जाणीने एवा लोकने (वस के०) वशमा (नगछे के०) नपोहोचे ॥ २४ ॥ (एवतिरिक्खेमणुयासुरेसु के०) ए जेम अशुज कर्मिने नरकगति कही तेम तिर्यंच मनुष्य तथा देवतानी गति एम बधिमली (चतुरत्तणत के०) चतुर्गतिक ससारने विषे अनत (तयणुविवागं के०) तदनुरूप विपाक एटले अनंत एवो कर्मनो जे विपाक (ससव्वमेयंइतिवेदइत्ता के०) सबुद्धिमान् सर्वमेतदितिविदित्वा एटले पंमित पुरुष ए पूर्वोक्त सर्वने इति एम जाणीने जेरीते श्रीजगवते कह्योछे तेरीते (कखेज्जके०) कांक्षा करे एटले वाछे सुंवाछेतोके (काल के०) काल एटले ज्यासुधी मरण प्राप्त थाय त्यांसुधी (धुयके०) ध्रौव एटले सयमने (आयरेज्ज के०) आचरे एतावता चारित्रविना जीव चतुर्गतिक संसारमा ज्रमण करे ते कारण माटे जाव जीव सुधी त्रिविधे दयाधर्म रूप निरतिचार चारित्र पालवाने वाछे अने सर्वथा पापनो त्याग करे तिबेमिनो अर्थ पूर्ववत् जाणवो ॥ २५ ॥ इति श्री नरकविजक्तिनामे पाचमा अध्ययननो अर्थ संपूर्ण थयो ॥

---

॥ दीपिका—यत्कर्म यादृग पूर्वजन्मातरे अकार्षीत् कृतं तत्तादृगमेव सपराये ससारे अनुगच्छति। एकातेन दु खमेव जवोयस्मिन् नएकातदु खजवस्तमर्जयित्वा दु खिनस्तमनत दु खवेदयंति॥२३॥ एतान्नरकान् श्रुत्वा धीरोनहिंस्यात्कचन प्राणिन सर्वलोके एकांतदृष्टि र्निश्चलसम्यक्त्वोऽ परिग्रह ।तुशब्दान्मृषावादादिवर्जनमपि ज्ञेय । तथा लोक अशुजकर्म कारिणं तद्विपाकच जुंजानं बुध्यते जानीयात् नतु तस्य वश गच्छेत् ॥ २४ ॥ एवमशुज कर्मकारिणामसुमता तिर्यङ्मनुष्यामरेष्वपि चतुरंतं चतुर्गतिकमनंतमपर्यवसान तद

नुत्तरस्तथा गिरिषु मध्ये पर्वभिर्मेखलादिभिर्दंष्ट्रापर्वतैर्वा डुर्गोविषम· सामान्यजंतूना ड्डुरारोहोगिरिवर पर्वतप्रधान । तथाऽसौ मणिभिरौषधीभिश्च देदीप्यमानतया जौमइव नूदेशइव ज्वलितइति ॥ १२ ॥

मही३ मज्नंमि ठिते णगिंदे, पन्नाय ते सुरिय सुद्धलेसे ॥ एव सि रीए उस नूरिवन्ने, मणोरमे जावइ अच्चिमाली॥ १३ ॥ सुदस णस्सेव जसो गिरिस्स, पचुच्चई महतो पव्वयस्स ॥ एतोवमे समणे नायपुत्ते, जातीजसो दंसणनाणसीले ॥ १४ ॥

अर्थ–( महीऽमज्नंमिठिते के० ) मही एटले पृथ्वीने वचमा आवेलो जे जंबूद्वीप तेना मध्यनागे एटले वचमा वर्त्तेठे ( णगिंदे के० नगेंद्र एटले सर्व पर्वतोना इंद्र सरखो ए मेरु पर्वत जाणवो ( ते के० ) ते पर्वत लोकमा ( सूरिय के० ) सूर्यनी पेरे ( सुद्धलेसे के०) विशुद्धनिर्मल कांतिवानठे एम ( पन्नाय के० ) प्रकर्षे करी जाणीये (एव के० ) ए प्रकारे करी ( सिरीएउस के० ) लक्ष्मीये सहित ते मेरू रत्न (नूरिवन्ने के० ) अनेक वर्णे करी सहितठे तथा ( मणोरमे जावइ अच्चिमाली के० ) मनने रमाडनार तथा जेनी ज्योति अर्चिमाली एटले सूर्य तेनी पेरे दशे दिशिने विषे प्रकाश पामेठे ॥१३॥ हवे ए मेरु पर्वतनी उपमाउ श्रीमहावीर नगवतनी साथे जोडेठे ( सुदसणस्सेवज सोगिरिस्स के० ) सुदर्शन नामा जे गिरि एटले पर्वत तेनोजे यश ( पचुच्चई के० ) क हियेठेए तेवो (महतोपव्वयस्सके०) महोटो मेरुपर्वत जाणवो (एतोवमेके०) एमेरुनी उ पमाये ( समणेनायपुत्ते के० ) श्रमण तपस्वी ज्ञातपुत्र श्रीमहावीर देव जाणवा (केवी रीते तोके (जातीजसो दसणनाणसीलेके०) जातिये करी, यशे करी, दर्शने करी, ज्ञाने करी अने शीले करी समस्त जेटला धर्म मार्गना प्रकाशकोठे तेमा श्रीमहावीर देव प्रधानठे

॥ दीपिका–महारत्नप्रनापृथिव्यामध्यदेशे जंबूद्वीपस्तन्मध्ये स्थितोनगेंद्र प्रकर्षे ण ज्ञायते सूर्यवत् शुद्धलेश्य सूर्यसमतेजा.। एव पूर्वोक्तप्रकारेण श्रिया समेरुर्भूरिवर्णो ऽनेकवर्णरत्नोपेतत्वात् मनोरम अर्चिमाली सूर्यइव द्योतयति दिश ॥ १३ ॥ एतद्यश कीर्तन सुदर्शनस्य गिरेर्मेरो प्रोच्यते महत पर्वतस्य एतडुपमएतत्तुल्य श्रमणोज्ञात पुत्र श्रीवीर सजात्या यशसा दर्शनज्ञानाभ्या शीलेन वा श्रेष्ठ । अत्रो आदित्वान्मत्व र्थीयाच्प्रत्ययेन योज्य- ॥ १४ ॥

॥ टीका–किंच ( महीइत्यादि )। मह्या रत्नप्रनापृथिव्या मध्यदेशे जंबूद्विपस्तस्याऽपि बहुमध्यदेशे सौमनस, विद्युत्प्रन, गधमादन माल्यवत, दंष्ट्रापर्वतचतुष्टयोपशोभित समनू

पुछिस्सु ण समणा माहणाय, अगारिणोया परतिछिआय ॥
से केइ णेगंतहियं धम्ममाहु, अणेलिसं साहु समिक्कयाए॥१॥
कहंच णाणं कह दसणं से, सीलं कहं नायसुतस्स आसी॥ जा
णासि ण भिक्कु जहातहेणं, अहासुत बूहि जहाणिस तं ॥ २॥

के० ... (पुछिस्सुण के०) पूर्वोक्त नरकना दुःख सांभळीने संसारना भयथी बीकपाम्या धर्मवंत पुरुष ... पुरुषो श्रीसुधर्म स्वामिने पूछेछे ते कोण पूछेछे तोके ( समणा के०) साधु ना दुःख न भोगके० ) ब्राह्मण तथा ( अगारिणोया के० ) आगारीते गृहस्थ क्षत्रिया र जीवछे तेकोऽन्नि छिआयके०) अन्य तीर्थिकते शाक्यादिक तापस प्रमुख जाणवा ए यारूक तथा ( अपर्कहेछे ( सेकेऽणेगत के० ) ते कयो एकांत ( हियके० ) हितनो कर कनु वर्जन पण जलिस के० ) अनीदृशमतुलं एटले निरुपम शाश्वत ( साहुसमिक्कयाए कर्मकारी जेवो त्मीक्षाये यथास्थित तत्व ज्ञाने करी ज्ञातपुत्र श्रीमहावीरदेवे निरतो ( ध लोकने ( वस वे ( आहु के० ) कह्योछे के जेणे करी जीव सुख पामे ॥ १ ॥ ( कहंचणा रेसु के० ) ए ] ज्ञान वली ( कहदसणसे के० ) दर्शन चारित्ररूप केवु तथा ( सीलक्कह गति एम बनियमरूप शील केवुछे ए वधुं (नायसुतस्सआसीके०) ज्ञातपुत्र एटले क्षत्रि के० ) तदनुरू सिद्धार्थ राजाना पुत्र श्रीमहावीरने विषे केवु हतुं ते ( भिक्कू के० ) अ क्के०) मबुद्धि ( जाणासिण के० ) ए सर्व जेरीते तमे जाणोछो ( जहातहेण के० ) यथा णीने जेरीते सत्य निरुपण रूप (अहासुतं के०) जेम तमे सांभळ्युं छे (जहाणिसतं के०) ( काल कोर्त एटले सांभळीने जेम हृदयने विषे धारण कर्युछे तेम अमने (बूहिके०) कहो. सयमने

मण कदीपिका—अथ षष्ठमारभ्यते। पूर्वाध्ययने नरकविभक्तिरुक्ता श्रीवीरेण। ततोत्र श्रीवीर लवाने गुणाउच्यते तस्येदमादिसूत्र (पुछिस्सुणमिति) जंबूस्वामी सुधर्माणमाह। यथा के ऽति नूतो धर्मेचक्रऽस्येतद्दद्धोमा पृष्टवत श्रमणा साधवादयस्तथा ब्राह्मणाब्रह्मचर्या — ष्ठानरताअगारिण क्षत्रियादयोयेच शाक्यादय परतीर्थिकास्ते सर्वेपि पृष्टवत। किंतदि त्याह। योसो ऽम धर्म एकांतहितमाह उक्तवान् अनीदृशमनन्यसदृशमतुल्यमित्यर्थ। साध्वी चासौ समीक्षा तत्वपरिछित्तिश्च साधुसमीक्षा सासमता तया उक्तवान् ॥१॥ तस्य श्रीवीरस्य ज्ञानं किंभूत च दर्शनं शीलंच यमनियमरूपं कीदृगासीत्। हेसुधर्मस्वामिन् यन्मयाएष्ट तद्याथातथ्येन त्वंजानासि। ण वाक्यालंकारे। यथाश्रुतं श्रुत्वा च यथानिशं तमवधारितं तथा त्व बूहि ऽति पृष्ट सुधर्मा वीरगुणानाह ॥ २ ॥

रहित एवु निर्दोष शुक्ल ध्यान सुवर्णनी पेरे उज्वलछे अथवा गंम शब्दे उदकनु फेण ते सरखु उज्वलछे तथा ( सखिंडु के० ) शंख अने चद्रमा तेनीपेरे (एगतवदातसुक्कं के०) एकात अवदात एटले अत्यत शुक्ल एवु शुक्ल ध्यानछे, तेने ध्यावे ॥ १६ ॥

॥ दीपिका–यथा निपधोगिरिवराणा गिरीणामायताना मध्ये दीर्घत्वेन श्रेष्ठस्तथा वलयायताना मध्ये रुचक पर्वत श्रेष्ठ । सहि रुचकद्वयातवर्ती मानसोत्तरगिरिरिव वृत्ता यतोऽसख्येययोजनानि परिक्षेपेण स जगवान् तडुपमोजगति ससारे जूतिप्रज्ञ प्रजूत ज्ञानोमुनीना मध्ये प्रज्ञ । एव तत्स्वरूपविदउदाहुरुक्तवत ॥१५॥ अणुत्तर उत्कृष्टधर्मेमुदी र्य कथयित्वा ऽनुत्तर प्रधान ध्यान ध्यायति सुष्ठु शुक्लवत् शुक्ल ध्यान अपगत गंडं दोपो यस्मात्तदपगंडं निर्दोप शुक्ल। अथवा अपगडमुदकफेन तत्तुल्यं शखेंडुवत् एकातावदातं शुक्लध्यानोत्तरजेद द्वय ध्यायति । तथाहि । योगनिरोधकाले सूक्ष्मं काययोग निरुंधन् शु क्लध्यानस्य तृतीय जेद सूक्ष्मक्रियमप्रतिपाताख्यं तथा निरुद्धयोगं चतुर्थ शुक्लध्यानजेदं व्युपरतक्रियमनिवृत्याख्यं ध्यान ध्यायतीति ॥ १६ ॥

॥ टीका–पुनरपि दृष्टांत द्वारेणैव जगवतोव्यावर्णनमाह । ( गिरिवरेत्यादि ) यथा नि षधोगिरिवरोगिरीणामायताना मध्ये जबुद्वीपेऽन्येषु वा द्वीपेषु दैर्घ्येण श्रेष्ठ प्रधान तथा वलयाऽऽयताना मध्ये रुचक पर्वतोऽन्येन्योवलयाय तत्वेन । यथा प्रधान सहि रुचक द्वीपांतर्वर्ती मानुपोत्तरपर्वतइव वृत्तायतोऽसख्येययोजनानि परिक्षेपेणेति । तथा सज गवानपि तडुपम । यथा वाऽऽयतवृत्तताभ्यां श्रेष्ठश्च । एव जगवानपि जगति ससारे जूति प्रज्ञ प्रजूतज्ञातप्रज्ञयाश्रेष्ठइत्यर्थ । तथा परमुनीना मध्ये प्रकर्षेण जानातीति प्रज्ञ । एव तत्स्वरूपविदउदाहुरुदाहृतवतउक्तवतइत्यर्थ ॥ १५ ॥ किंचाऽन्यत् ( अणुत्तरमि त्यादि ) नाऽस्योत्तर प्रधानोऽन्योधर्मोविद्यते इत्यनुत्तर । तमेवजूत धर्म उत् प्राबल्येन ईरयित्वा कथयित्वा प्रकाश्याऽनुत्तर प्रधान ध्यानवर ध्यानश्रेष्ठ ध्यायति ॥ तथाहि । उ त्पन्नज्ञानोजगवान् योगनिरोधकाले सूक्ष्म काययोग निरुधन् शुक्लध्यानस्य तृतीय जेदं सूक्ष्मक्रियमप्रतिपाताख्य । तथा निरुद्धयोग चतुर्थशुक्लध्यानजेद व्युपरतक्रियमनिवृत्ता ख्य ध्यायति । एतदेव दर्शयति । सुष्ठु शुक्लवच्छुक्ल ध्यान । तथा अपगत गंडमपद्रव्य यस्य तदपगतगम निर्दोषार्जुनसुवर्णवत् शुक्लं। यदिवा गडमुदकफेन तत्तुल्यतिति जाव । तथा शंखेंडुवदेकातावदात शुभ्र शुक्ल शुक्लध्यानोत्तर जेद द्वय ध्यायतीति ॥ १६ ॥

अणुत्तरग्गं परम महेसी, असेसकम्म स विसोहइत्ता॥सिद्धि ग
ते साइमणतपत्ते, नाणेण सीलेण य दसणेण॥१७॥रुक्खेसु णाते

इति नएयते । यदिवा द्रव्यवीरोव्यतिरिक्तएकन्नविकादि । क्षेत्रवीरोयत्र तिष्ठत्यसौ व्या वर्ण्यते वा कालोऽप्येवमेव । नावत्रीरोनोआगमतोवीरनामगोत्राणि कर्माण्यनुनवन् स च वीरवर्धमानस्वाम्येवेति ॥ स्तवनिक्षेपार्थमाह ॥ थुइणिरकेवोचत्तहा, अंगतुअनूसणेहि दवसुती ॥ नावेसतताणगुणा, एकित्तणाजेजहिंजणिया ॥ १ ॥ ( थुइणिरकेवोइत्यादि ) स्तुते स्तवस्य नामादिश्चतुर्धा निक्षेप । तत्र नामस्थापने पूर्ववत् । द्रव्यस्तवस्तु ज्ञश रीरजव्यशरीरव्यतिरिक्तोय कटककेयूरस्रक्चदनादिनि सचित्ताचित्तद्रव्ये क्रियतइति । नावतस्तु वस्तुत सनूताना विद्यमानानां गुणाना ये यत्र नवति तत्कीर्तनमिति ॥ साप्रतं आद्यसूत्रसस्पर्शीद्वारेण सकलाध्ययनसंबधप्रतिपादिका गाथा निर्युक्तिकृदाह । पुछिस्सु जनुणामो,अज्ज सुहम्मा ततकहेसीय । एवमहाप्पवीरो, जयमाहाहु तहा जएज्जा हि ॥ २ ॥ जबूस्वामी आर्यसुधर्मस्वामिन श्रीमन्महावीरवर्धमानस्वामिगुणान् पृष्टवान् अतोऽसावपि जगान् सुधर्मस्वाम्येवगुणविशिष्टोमहावीरइति कथितवान । एवं चाऽसौ न गवान् ससारस्य जयमजिनव चाह । ततोयूयमपि यथा नगवान ससार जितवान तथै य यत्न विधत्त । साप्रत निक्षेपानतर सूत्रानुगमेऽस्खलितादिगुणोपेत सूत्रमुच्चारयितव्य । तच्चेद । (पुछिस्सुणमित्यादि) । अस्य चाऽनंतरसूत्रेण सहाय सबध ।तद्यथा । तीर्थकरो पदिष्टेन मार्गेण ध्रुवमाचरन् मृत्युमुपेक्षेतेत्युक्तं । तत्र किंनूतोऽसौ तीर्थकृत् येनोप दिष्टोमार्गइत्येत् पृष्टवत श्रमणायतयइत्यादि । परपरसूत्रसंबधस्तु बुध्येत ॥ यदुक्तं । प्रागित्येतच्च यदुत्तरत्र प्रश्नवचन वक्ष्यते तच्च बुध्यतेत्यनेन संबधेनाऽयातस्याऽस्य सूत्रस्य सहितादिक्रमेण व्याख्या प्रतन्यते । साचाऽयमनतरोक्ता वहुविधा नरकविनक्ति श्रुत्वा ससाराडुद्विग्नमनस केनेय प्रतिपादितेत्येतत् सुधर्मस्वामिनमप्राक्षु पृष्टवत । णमितिवाक्यालंकारे । यदिवा जबूस्वामी सुधर्मस्वामिनमेवमाह । यथा केनैव नूतोधर्म ससारोत्तरणे समर्थ प्रतिपादितइत्येतद्दहवोमा पृष्टवत । तद्यथा । श्रमणानिग्र थादयोब्राह्मणाब्रह्मचर्याद्यनुष्ठाननिरतास्तथाऽऽगारिण क्षत्रियादयोयेच शाक्यादय पर तीर्थिकास्ते सर्वेऽपि पृष्टवत । कितदिति दर्शयति । सकोयोऽसावेन धर्म डुर्गतिप्रसृतज तुधारकमेकातहितमाहोक्तवान् अनीदृशमतुलमित्यर्थ । तथा साध्वीचाऽसौ समीक्षा च साधुसमीक्षा यथावस्थिततत्त्वपरिछित्तिस्तया यदिवा साधुसमीक्षया समतयोक्तवानिति ॥ ॥ १ ॥ तथा तस्यैव ज्ञानादिगुणावगतये प्रश्नमाह । ( कहचणाणमित्यादि ) कथ केन प्रकारेण नगवान् ज्ञानमवाप्तवान् किंनूतं वा तस्य नगवतोज्ञान विशेषावबोधक । किं नूतं च तस्य दर्शन सामान्यार्थपरिछेदक शीलं च यमनियमरूप कीदृक् ज्ञाता क्षत्रियास्ते षां पुत्रोनगवान् वीरवर्धमानस्वामी तस्याऽऽसीदनूदिति यदेतन्मया पृष्टं तत् निक्षोसुध र्मस्वामिन् याथातथ्येन त्वं जानीपे सम्यगवगछसि । (णमितिवाक्यालंकारे) तदेतत्सर्वं

क्रीडां वेदयत्यनुनवति । वनेषु च मध्ये यथा नंदन देवाना क्रीडास्थान प्रधान । एव नगवानपि ज्ञानेन केवलाख्येन समस्तपदार्थाविर्नावकेन शीलेन च चारित्रेण यथा ख्यातेन श्रेष्ठ प्रधानोनूतिप्रज्ञ प्रवृद्धज्ञानोन्नगवानिति ॥ १८ ॥

थणियंव सद्दाण अणुत्तरे उ, चदोव ताराण महाणुनावे ॥ गधे सु वा चदणमाहु सेठं, एव मुणीण अपडिन्नमाहु ॥ १९॥ जहा सयंनू उदहीण सेठे, नागेसु वा धरणिंदमाहुसेठे ॥ खोउदए वा रसवेजयंते, तवोवहाणे मुणिवेजयते ॥ २० ॥

अर्थ–जेम ( सद्दाण के० ) शब्दमा ( थणियंव के० ) स्तनित एटले मेघनी गर्जनानो शब्द (अणुत्तरेउके०) प्रधान एटले रुडो कह्योछे तथा ( चदोवताराणमहाणुनावे के० ) जेम ग्रह नक्षत्र अने ताराने विपे चंद्रमा महानुनाव कह्योछे तथा (गधेसुवाचदणमाहुसेठके०) जेमसमस्त गंधमा गोशीर्प बावना चंदन श्रेष्ठ कह्युछे (एव के०) एम (मुणीण के०) समस्त साधुमां (अपडिन्नमाहुके०) अप्रतिज्ञ एटले आलोक परलोकनी आशसा करवानी जेने प्रतिज्ञा नथी अर्थात् इहलोक परलोकनी आशसा रहित एवा श्रीमहावीरने मोहोटा श्रेष्ठ कह्याछे ॥ १९ ॥ ( जहासयंनूउदहीणसेठे के० ) जेम समस्त समुद्रमां स्वयंनूरमण समुद्र श्रेष्ठ कह्योछे ( नागेसुवाधरणिंदमाहुसेठे के० ) जेम नागकुमार देवोमा धरणेंद्रनामा इंद्र श्रेष्ठ कह्योछे (खोउदएवारसवेजयतेके०) जेम इक्षुरसोदक समस्त रसमां प्रधान वेजयत एटले वखाण्योछे (तवोवहाणेमुणिवेजयतेके०) तेम तप उपधाने करी तपो विशेपे करी समस्त मुनिमा श्रीमहावीर ने प्रधानवखाण्याछे॥२०॥

॥ ... था शब्दाना मध्ये स्तनित मेघगर्जितमनुत्तर प्रधानं । तुर्विशेषणे । यथा चंद्रोमहानुनाव श्रेष्ठ । गधेपु मध्ये यथा चदन श्रेष्ठ तज्ज्ञा आहु । त नगवतं श्रेष्ठमाहु । किंनूतं । नास्य प्रतिज्ञा इहलोकपरलोकाशंसिनी वि ... ॥ स्वयंनुवस्ते यत्रागत्य रमतऽति स्वयनूरमण सयथा उद ... ४ । नागेपु नवनपतिविशेपेपु धरणेंद्र श्रेष्ठमाहु । (खोउदए ... सइक्षुरसोदक समुद्रोयथा रसमाश्रित्य वेजयत प्रधान । ... मुनिर्नगवान् वैजयत प्रधान ॥ २० ॥

... ) यथा शब्दाना मध्ये स्तनितं मेघगर्जितं तदनुत्त ... वा । तारकाणा च नक्षत्राणां मध्ये यथा

ति ॥ ३ ॥ ऊर्ध्वमधस्तिर्यक्च सर्वदिक्षु चतुर्दशरज्ज्वात्मके ये त्रसा स्थावराश्च ये प्राणिनस्तान् नित्यानित्यान्या समीक्ष्य ज्ञात्वा प्राज्ञोभगवान् दीपइव प्रकाशकत्वात् धर्ममुदाहृ उक्तवान् समतया । यदागम । जहापुरुस्सकत्थई तहातुछस्सकत्थइ इति ॥ ४ ॥

॥ टीका–स एव पृष्ट सुधर्मस्वामी श्रीमन्महावीरवर्धमानस्वामिगुणान कथयितुमाह । ( खेयन्नएसेऽत्यादि ) स भगवान् चतुस्त्रिंशदतिशयसमेत खेद ससारान्तर्वर्तिना प्राणिना कर्मविपाकज दुःखं जानातीति खेदज्ञोदुःखापनोदनसमर्थोपदेशदानात् । यदिवा क्षेत्रज्ञोयथावस्थितात्मस्वरूपपरिज्ञानादात्मज्ञऽति । अथवा क्षेत्रमाकाश तज्जानातीति क्षेत्रज्ञोलोकालोकस्वरूपपरिज्ञातेत्यर्थः । तथा भावकुशानष्टविधकर्मरूपान् लुनाति छिनत्ति कुशल प्राणिना कर्मोच्छित्तये निपुणइत्यर्थः । आशु शीघ्र प्रज्ञा यस्याऽसावाशुप्रज्ञ' । सर्वत्र सदोपयोगान्नछद्मस्थइव विचिन्त्य जानातीति भाव । महर्षिरिति क्वचित्पाठ' । महाश्चासावृषिश्च महर्षिरत्यतोग्रतपश्चरणानुष्ठायित्वादतुलपरीषहोपसर्गसहनाच्चेति । तथा अनंतमविनाश्यनतपदार्थपरिच्छेदक वा ज्ञान विशेषग्राहक यस्यासावनतज्ञानी । एव सामान्यार्थपरिच्छेदकत्वेनाऽनतदर्शी । तदेव भूतस्य भगवतोयशोनृसुरासुरातिशाय्यतुल विद्यते यस्य सयशस्वी तस्य लोकस्य चक्षु पथे लोचनमार्गे भवस्थकेवव्यवस्थाया स्थितस्य लोकाना सूक्ष्मव्यवहितपदार्थाविर्भावनेन चक्षुर्भूतस्य वा जानीह्येव गन्ह । धर्म ससारोद्धरणस्वभाव तत्प्रणीत वा श्रुतचारित्राख्यं तथा तस्यैव भगवतस्तथोपसर्गितस्याऽपि निष्प्रकपा चारित्राचलनस्वभावा धृतिं संयमे रति तत्प्रणीता वा प्रेक्षस्व सम्यक्कुशाग्रीयया बुद्ध्या पर्यालोचयेति । यद्विवा तैरेव श्रमणादिभि सुधर्मस्वाम्यभिहितो यथा त्व तस्य भगवतोयशस्विनश्चक्षुष्पथे व्यवस्थितस्य धर्म धृति च जानीषे। ततोऽस्माकं ( पेहित्ति ) कथयेति ॥ ३ ॥ साप्रत सुधर्मस्वामी तद्गुणान् कथयितुमाह । ( उड्ढंअहेयमित्यादि ) ऊर्ध्वमधस्तिर्यक्षु सर्वत्रैव चतुर्दशरज्ज्वात्मके लोके ये केचन त्रस्यतीति त्रसास्तेजोवायुरुपाविकलेंद्रियपचेंद्रियभेदात् त्रिधा । तथा येच स्थावरा पृथिव्यंबुवनस्पतिभेदात् त्रिविधा । एते श्वासादय प्राणाविद्यंते येषां ते प्राणिनइत्यनेन च शाक्यादिमतनिरासेन पृथिव्याद्येकेंद्रियाणामपि जीवत्वमावेदित भवति । सभगवास्तान् प्राणिन प्रकर्षेण केवलज्ञानित्वात् जानातीति प्रज्ञः [illegible] नित्यानित्यान्याद्रव्यार्थपर्यायार्थाश्रयणात् समीक्ष्य केवलज्ञानेनाऽर्थान् [illegible] प्रज्ञापनायोग्यानाहेत्युत्तरेण संबंध । तद्यथा । सप्राणिना पदार्थाविर्भावने [illegible] । यद्विवा ससारे पतितानां सदुपदेशप्रदानतआश्वासहेतुत्वात् [illegible] सर्वभूत. संसारो[illegible] समर्थं श्रुतचारित्राख्य सम्यक् ऽत गत [illegible] हितत्वेन सम[illegible]

मृगाणा श्वापदाना मध्ये सिंह प्रधान । जरतक्षेत्रापेक्षया यथोदकानां मध्ये गंगोदकं प्रधानं यथा च पक्षिणा मध्ये गरुडोऽपरनामा वेणुदेव प्रधानस्तथानिर्वाणपथदेश काना ज्ञातपुत्र श्रीवीर प्रधानोयथास्थितमोक्षार्थवादित्वात् ॥ २१ ॥ योधानां मध्ये यथा विश्वा सपूर्णा सेना यस्य सविश्वसेनश्चक्री ज्ञात पुष्पेषु यथाऽरविंदं प्रधानमाहु. क्षत्रियाणा मध्ये यथा दांताउपशांतावाक्येनवा शत्रवोयस्मात्सदांतवाक्यश्चक्रवर्ती प्र धानस्तथा ऋषीणा मध्ये श्रीवर्धमान श्रेष्ठ ॥ २२ ॥

॥ टीका-( हत्थीसुइत्यादि ) हस्तिषु करिवरेषु मध्ये यथा ऐरावतं शक्रवाहनं ज्ञातं प्रसिद्ध दृष्टातनूतं वा प्रधानमाहुस्तज्ज्ञा । मृगाणां च श्वापदाना मध्ये यथा सिंह केसरी प्रधानस्तथा जरतक्षेत्रापेक्षया सलिलाना मध्ये यथा गंगासलिलं प्रधानजावमनुजव ति । पक्षिषु मध्ये यथा गरुत्मान वेणुदेवाऽपरनामा प्राधान्येन व्यवस्थित । एव निर्वा ण सिद्धिक्षेत्राख्य कर्मच्युतिलक्षणवा स्वरूप तत्तदुपायप्राप्तिहेतुतोवा वदितु शील येषां ते तथा तेषा मध्ये ज्ञाता क्षत्रियास्तेषा पुत्रोऽपत्य ज्ञातपुत्र श्रीमन्महावीरवर्धमान स्वामी सप्रधानइति यथावस्थितनिर्वाणार्थवादित्वादित्यर्थ ॥ २१ ॥ अपिच ( जोहे सुइत्यादि ) योधेषु मध्ये ज्ञातोविदितोदृष्टांतजूतोवा विश्वा हस्त्यश्वरथपदातिचतुर गबलसमेता सेना यस्य सविश्वसेनश्चक्रवर्ती यथाऽसौप्रधान पुष्पेषु च मध्ये यथाऽ रविंद प्रधानमाहु । तथा क्षतात् त्रायतइति क्षत्रियास्तेषा मध्ये दांताउपशांतायस्य वाक्येनैव शत्रव सदांतवाक्यश्चक्रवर्ती यथासौ श्रेष्ठ. । तदेव बहून् दृष्टांतान् प्रशस्तान् प्रदर्श्याऽधुना जगवतं दार्ष्टांतिक स्वनामग्राहमाह । तथा ऋषीणा मध्ये श्रीमान् वर्धमानस्वामी श्रेष्ठइति ॥ २२ ॥

दाणाण सेठ्ठ अजयप्पयाण, सच्चेसुवा अणवज्ज वयंति ॥ तवेसु वा उत्तमबंजचेरं, लोगुत्तमे समणे नायपुत्ते ॥ २३ ॥ ठिईण से ठा लवसत्तमावा, सजा सुहम्माव सजाण सेठा ॥ निवाणसेठा जह सवधम्मा, ण णायपुत्ता परमत्थी नाणी ॥ २४ ॥

अर्थ-( दाणाणसेठ्ठअजयप्पयाण ) जेम समस्त दानने विषे अजयदान श्रेष्ठ कह्यु ( सच्चेसुवाअणवज्जवयंति के० ) जेम सत्य वचनमा निरवद्य एटले जे वचनना उच्चारे करी परने पीडा उत्पन्न नथाय ते वचन श्रेष्ठ वखाण्युछे ( तवेसुवाउत्तमबंजचेर के० ) जेम सर्व तपमा नवविध ब्रह्मगुप्ति सहित ब्रह्मचर्य श्रेष्ठकह्योछे (लोगुत्तमेसमणेनायपुत्ते के० ) तेम लोकमा उत्तम श्रमण तपस्वी श्रीमहावीर देव श्रेष्ठ वखाण्याछे ॥ २३ ॥

